## ॥ श्रीघटिकाचलहनुमत्स्तोत्रम् १ ॥

ब्रह्माण्डपुराणतः स्तोत्रं
अतिपाटलवक्त्राब्जं धृतहेमाद्रिविग्रहम् ।
आञ्जनेयं शङ्खचक्रपाणिं चेतसि धीमहि ॥ १॥

श्रीयोगपीठविन्यस्तव्यत्यस्तचरणाम्बुजम् ।
दरार्यभयमुद्राक्षमालापट्टिकया युतम् ॥ २॥

पारिजाततरोर्मूलवासिनं वनवासिनम् ।
पश्चिमाभिमुखं बालं नृहरेर्ध्यानसंस्थितम् ॥ ३॥

सर्वाभीष्टप्रदं नृणां हनुमन्तमुपास्महे ।
नारद उवाच
स्थानानामुत्तमं स्थानं किं स्थानं वद मे पितः ।
ब्रह्मोवाच
ब्रह्मन् पुरा विवादोऽभून्नारायणकपीशयोः ॥

तत्तेऽहं सम्प्रवक्ष्यामि सावधानमनाः शृणु ।
एकमासाद्वरदः साक्षात् द्विमासाद्रङ्गनायकः ॥ १॥

मासार्धेन प्रवक्ष्यमि तथा वै वेङ्कटेश्वरः ।
अर्धमासेन दास्यामि कृतं तु परमं शिवम् ॥ २॥

घटिकाचलसंस्थानाद्धटिकाचलवल्लभः ।
हनुमानञ्जनासूनू रामभक्तो जितेन्द्रियः ॥ ३॥

घटिकादेव काम्यानां कामदाता भवाम्यहम् ।
शङ्खचक्रप्रदो येन प्रदास्यामि हरेः पदम् ॥ ४॥

घटिकाचलसंस्थाने घटिकां वसते यदि ।
स मुक्तः सर्वलोकेषु वायुपुत्रप्रसादतः ॥ ५॥

ब्रह्मतीर्थस्य निकटे राघवेन्द्रस्य सन्निधौ ।
वायुपुत्रं समालोक्य न भयं विद्यते नरे ॥ ६॥

तस्माद्वायुसुतस्थानं पवित्रमतिदुलर्भम् ।
पूर्वाब्धेः पश्चिमे भागे दक्षिणाब्धेस्तथोत्तरे ॥ ७॥

वेङ्कटाद्दक्षिणे भागे पर्वते घटिकाचले ।
तत्रैव ऋषयः सर्वे तपस्तप्यन्ति सादरम् ॥ ८॥

पञ्चाक्षरमहामन्त्रं द्विषट्कं च द्विजातिनाम् ।
नाममन्त्रं ततः श्रीमन् स्त्रीशूद्राणामुदाहृतम् ॥ ९॥

तत्र स्नात्वा ब्रह्मतीर्थे नत्वा तं वायुमन्दिरे ।
वायुपुत्रं भजेन्नित्यं सर्वारिष्टविवर्जितः ॥ १०॥

सेवते मण्डलं नित्यं तथा वै ह्यर्धमण्डलम् ।
वाञ्छितं विन्दते नित्यं वायुपुत्रप्रसादतः ॥ ११॥

तस्मात्त्वमपि भोः पुत्र निवासं घटिकाचले ॥ ११॥

नारद उवाच
कथं वासः प्रकर्तव्यो घटिकाचलमस्तके ।
केन मन्त्रेण बलवानाञ्जनेयः प्रसीदति ॥ १२॥

विधानं तस्य मन्त्रस्य होमं चैव विशेषतः ।
कियत्कालं तत्र वासं कर्तव्यं तन्ममावद ॥ १३॥

ब्रह्मोवाच
ब्रह्मतीर्थे ततः स्नत्वा हनुमत्संमुखे स्थितः ।
द्वादशाक्षरमन्त्रं तु नित्यमष्टसहस्रकम् ॥ १४॥

जपेन्नियमतः शुद्धस्तद्भक्तस्तु परायणः ।
निराहारः फलाहारो ब्रह्मचर्यव्रते स्थितः ॥ १५॥

मण्डलं तत्र वस्तव्यं भक्तियुक्तेन चेतसा ।
ध्यानश्लोकं प्रवक्ष्यामि शृणु नारद तत्वतः ॥ १६॥

तमञ्जनानन्दनमिन्दुबिम्बनिभाननं सुन्दरमप्रमेयम् ।
सीतासुतं सूक्ष्मगुणस्वदेहं श्रीरामपादार्पणचित्तवृत्तिम् ॥ १७॥

एवं ध्यात्वा सदा भक्त्या तत्पादजलजं मुदा ।
चतुर्थांशेन होमं वा कर्तव्यं पायसेन च ॥ १८॥

विधिना विधियुक्तस्तु विदित्वा घटिकाचलम् ।
जगाम जयमन्विच्छन्निन्द्रियाणां महामनाः ॥ १९॥

एवं नियमयुक्तः सन् यः करोति हरेः प्रियम् ।
विजयं विन्दते देही वायुपुत्रप्रसादतः ॥ २०॥

इति ब्रह्माण्डपुराणतः श्रीघटिकाचलहनुमत्स्तोत्रं सम्पूर्णम् ।

॥ श्रीघटिकाचलहनुमत्स्तोत्रम् २ ॥

शङ्खचक्रधरं देवं घटिकाचलवासिनम् ।
योगारूढं ह्याञ्जनेयं वायुपुत्रं नमाम्यहम् ॥ १॥

भक्ताभीष्टप्रदातारं चतुर्बाहुविराजितम् ।
दिवाकरद्युतिनिभं वन्देऽहं पवनात्मजम् ॥ २॥

कौपीनमेखलासूत्रं स्वर्णकुण्डलमण्डितम् ।
लङ्घिताब्धिं रामदूतं नमामि सततं हरिम् ॥ ३॥

दैत्यानां नाशनार्थाय महाकायधरं विभुम् ।
गदाधरकरो यस्तं वन्देऽहं मारुतात्मजम् ॥ ४॥

नृसिंहाभिमुखो भूत्वा पर्वताग्रे च संस्थितम् ।
वाञ्छन्तं ब्रह्मपदवीं नमामि कपिनायकम् ॥ ५॥

बालादित्यवपुष्कं च सागरोत्तारकारकम् ।
समीरवेगं देवेशं वन्दे ह्यमितविक्रमम् ॥ ६॥

पद्मरागारुणमणिशोभितं कामरूपिणम् ।
पारिजाततरुस्थं च वन्देऽहं वनचारिणम् ॥ ७॥

रामदूत नमस्तुभ्यं पादपद्मार्चनं सदा ।
देहि मे वाञ्छितफलं पुत्रपौत्रप्रवर्धनम् ॥ ८॥

इदं स्तोत्रं पठेन्नित्यं प्रातःकाले द्विजोत्तमः ।
तस्याभीष्टं ददात्याशु रामभक्तो महाबलः ॥ ९॥